॥ श्रीः ॥

# श्रीशारदोपायनम्

श्रीमतां चन्द्रवंशावतंसमहाराजाऽगोरी-
बडहराधीशश्री१०८ शारदामहेश-
प्रसादसाहिमहोदयानाम्

मुदे

द्विरेफापरनामधेयश्रीरघुवीरमिश्रेण
विनिर्मितम्



तदात्मजेन व्रतनाथशास्त्रिणा
प्रकाशितम्



प्रथमावृत्तौ ] [ १०००

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्री १०८ ईश्वर ... पुस्तकालय ...




श्रीमत्प्रबलप्रतापेत्यादिविविधविरुदावलीविराजमानमानोन्नत-
महानुभावानां चन्द्रवंशावतंसमहाराजाऽगोरीबडहराधीश-
श्री १०८ शारदामहेशप्रसादसाहिमहोदयानां
सविधे सविनयं विनिवेदयते

श्रीमन् !

भवत्पूर्वजैस्त्रिभिरपि पुरुषैः सम्मानितो भवतापि विद्योपदेशक-गुरुपदव्या सम्भावितो भवद्राज्यमधिवसन् राजार्हसुखभोगानन्द-मनुभवन् बहुतिथं समयं व्यनैषम्, किं बहुना भवद्राज्योपलब्धया वसुन्धरयाप्यहं मद्वंश्याः पुत्रपौत्रादयश्चोपकृताः सन्ति भविष्यन्ति च यावत्कल्पम्, तदेवमुपकारपरम्पराभाराक्रान्तमिवात्मानं मन्य-मानोऽहं तद्भारं केनचित्प्रत्युपकारेण लघूकरिष्यन् कमप्युपायं विचिन्तयन्नपि नाध्यगच्छम्, उचितं चैतत् "लक्ष्मीकलत्राय किमस्ति देयम्" तथापि प्रत्युपकाराभिलाषा नोपशान्ता वारं वार-माकुलयत्येव मां नीतिरपि तथैव "कृते च प्रतिकर्तव्यमेष धर्मः सनातनः" तदनुरोधादित्थमध्यवसम्, यद्भवादृशां काव्यानुरा-गिणां सरसहृदयानां पुरो रत्नान्तरेभ्यः काव्यरत्नमेव विशिष्यते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद् रामस्तवः, तेजबलिप्रतापविजयः, सङ्कीर्णालापश्चेत्येतत्प्रकरणत्रयात्मकं श्रीशारदोपायननामकाव्यं निर्माय समर्प्य च श्रीरामचन्द्रचरणारविन्दयोस्तत्प्रसादीकृतं तदिदं त्रिधा निबद्धं कर्पखण्डत्रयावगुण्ठितं सुदामोपायनमिव धर्मानुरागिणः श्रीमतो वासुदेवस्येव भवतः करकमलयोस्सादरं समर्पये प्रार्थये च प्रत्युपकारस्तुच्छतया हेयबुद्धिर्न कर्तव्या श्रीमद्भिः, यतः

प्रत्युपकारगुरुत्वलघुत्वे नो गणयन्ति कदापि महान्तः ।
प्रत्युपकारकमानसवृत्तिं वीक्ष्य भवन्ति तदादरचित्ताः ॥

आशासे च

लक्ष्मीश्वरोपायनसोदरोऽयं श्रीशारदोपायननामगुम्फः ।
यद्येकमप्यस्य भवन्मुदे स्यात् पद्यं तदा मे सफलः प्रयासः ॥

इति शुभम् ।



भवदीयो—

द्विरेफापरनामधेयः श्रीरघुवीरमिश्रः
ग्राम मसुरढी,
पो० जगदीशपुर
जि० आरा ।

सं० १९९३
विजयादशमी

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ श्रीसरस्वत्यै नमः ॥



# शारदोपायनम्



वाग्देवता जयति या जननान्तरेऽपि
सङ्गं न मुञ्चति कदाचिदिति प्रसिद्धिः ।
तस्मादनेकजननोचितसाहचर्य्यां
भक्तास्यलास्यरसिकां प्रणमन् भजे ताम् ॥ १ ॥

यस्याः कृपा वशयते नरराजलक्ष्मीं
देवान्प्रसाद्य किल कामदुघान्करोति ।
धर्मार्थकाममपवर्गमपि प्रदत्ते
श्रेयांसि सा मम तनोतु सरस्वतीयम् ॥ २ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवत्रयीव बुधवृन्दसमर्चिताङ्घ्रि-
र्वह्नित्रयीव शुचिमन्त्रसमेधमाना ।
वेदत्रयीव कलिताखिलशास्त्रसम्पत्
सेयं चकास्तु हृदि कापि गुरुत्रयी नः ॥ ३

सामान्यमान्यजनवर्णनयोजितेव
लज्जाजडीकृतगतिः पदमप्रगल्भम् ।
न त्वं निधेहि रघुवीरसरस्वतीह
श्रीरामनामपरमात्मनि योजितासि ॥ ४

उच्चावचाध्वनि मुधा परिधाविता त्वं
स्वैरं सरस्वति ! परिश्रमकर्शितानि ।
स्वाङ्गानि चेद्द्रढयितुं दृढनिश्चयासि
जिह्वाभिरामरसरामरसं भजस्व ॥ ५

काव्येषु सत्स्वपि महाकविकल्पितेषु
काव्यं मदीयमिदमादरणीयमेव ।
पीयूषधामकिरणेषु लसत्स्वपीह
नालम्ब्यते किमु नरेण करेण दीपः ॥ ६

उच्छिष्टमेतदविशुद्धमिति प्रहस्य
निन्दन्तु नाम मम काव्यमुदारवाचः ।
आस्वादयिष्यति तथापि स एव येन
नोपेक्षितानि शबरीबदरीफलानि ॥ ७ ॥

३ महामहोपाध्याय पं० श्रीशिवकुमारमिश्रः, महामहोपाध्याय पं० श्रीजयदेव मिश्रः, कविचक्रचूडामणिः पं० श्रीदुःखभञ्जनकविश्च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वीयैकदेशसमवस्थरसेन सर्वं
काव्यं रसात्मकमिति स्फुटमामनन्ति ।
अत्र स्थितेन वद रामरसेन सर्वं
काव्यं मदीयमपि किन्न रसात्मकं स्यात् ॥ ८ ॥

वेदा यदीयविरुदावलयो लसन्ति
वन्दी च यस्य चतुरश्चतुराननोऽपि ।
गेयं च यस्य सचराचरविश्वशिल्पं
तस्य प्रशस्तिकविता कपितैव मे स्यात् ॥ ९ ॥

रामं स्मरन् स वधिकोऽपि मरामरेति
वाल्मीकिरादिकविरादरणीय आसीत् ।
आख्यायिकेयमथवा सहसा नियुङ्क्ते
श्रीरामचन्द्रचरणस्तुतिसाहसे माम् ॥१०॥

ग्रावाऽपि यस्य पदपद्मपरागयोगा-
दासीदसीममहिमा मुनिधर्मपत्नी ।
तत्पादसेवनसमर्पितजीवनेयं
तत्किं ममापि कविता भविता न साध्वी ॥११॥

श्रेयोनिधानमुदितं भुवनत्रयस्य
मूर्तं मदोद्धतनिशाचरमेधमन्त्रम् ।
आदित्यवंशसुकृतैकफलस्वरूपं
तद्ब्रह्मधाम कलये हृदि रामनाम ॥१२॥

सीतास्वयंवरविधौ रघुनन्दनस्य
दोर्दण्डखण्डितगिरीशधनुर्निनादः ।
सानन्दनिर्जरनदत्पटहानुबन्धो
दूरीकरोतु मम विघ्नविहङ्गवृन्दम् ॥१३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उल्लङ्घितात्मकुलधर्मपथप्रवृत्तेः
शम्बूकशूद्रकमुनेरसुवायुतृप्तम् ।
श्रीरामचन्द्रभुजदण्डभुजङ्गराज-
जिह्वाकरालकरवालमहं स्मरामि ॥१४

ध्यायन्तु नाम दृढयोगविधानधीरा-
स्तन्नीरसं किमपि सादरमात्मतत्त्वम् ।
किन्तु द्विरेफरसना सरसं सरोजं
श्रीरामचन्द्रचरणं शरणं समेति ॥१५

काण्डैरतीतगणनैस्ससुवर्णपत्रै-
स्सर्गोज्ज्वलैर्दशशिरोनिधनं व्यधास्त्वम् ।
आद्यः कविः कतिभिरेव तु कौतुकेन
तद्रामचन्द्र ! तव नाम जपप्रभावः ॥१६

श्रीमन्महेशतनयोऽपि मदावलीढः
स्वल्पावकाशपदपत्रकसाधनोऽपि ।
त्वन्नामवर्णयुगमात्रपरिभ्रमेण
पूर्वार्हणां कलयते विजयी बुधेषु ॥१७

---

१५ कवेरपरं नाम द्विरेफ इति ।

१६ काण्डैर्बाणैः प्रकरणैश्च । ससुवर्णपत्रैः हिरण्यपक्षसहितैः, सुन्दरा[क्ष]रसहितलेखाधारैश्च सर्गोज्ज्वलैः त्यागोज्ज्वलैः, प्रकरणविशेषोज्ज्वलैश्च ।

१७ महेशतनयो गणेशः, मदावलीढः दानाम्बुलिप्तः, स्वल्पावकाशानि स्वल्[प]प्रसराणि पदानि चरणानि यस्य तथाभूतं पत्रकं वाहनं ( मूषकरूपं ) साधनं यस्य सः । वर्णयुगस्य परिभ्रमणं परिक्रमा, बुधेषु देवेषु । पक्षे, महेशतनयः कविः, मदावलीढः, गर्वावलिप्तः, स्वल्पावकाशा[नि] स्वल्पविषयाणि पदानि सुप्तिङन्तरूपाणि येषु एवं भूतानि पत्राणि लेखा[धा]रभूतानि साधनानि यस्य सः, स्वल्पज्ञ इति निष्कर्षः । परिभ्रमेण पुन[:]पुनरुच्चारणेन, बुधेषु पण्डितेषु ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## द्वादशभिः कुलकम्

रामेतिवर्णयुगलं तव वाचकत्वात्
सिद्धं, तदीयजपतश्शशिशेखरोऽपि ।
तस्याश्रयेण च पुरी किल काशिकेयं
कैवल्यदानमहिमानमहो दधाति ॥१८॥

मन्दाकिनीविमलवारितरङ्गभङ्ग-
संक्षालितामलशिलातलललितायाम् ।
यस्यां सुवर्णमयमन्दिरमिन्दुमौलेः
सौमेरवाग्रशिखरश्रियमातनोति ॥१९॥

यस्यां जनैर्द्रविणमेकमपि प्रदत्तं
भूयः सहस्रगुणितं प्रतिपद्यते तत् ।
किन्तु प्रदत्तमपि नैव पुनश्शरीरं
तद्वत्प्रपद्यत इतीव सुविस्मितोऽस्मि ॥२०॥

योगप्रयोगपरिकर्शितकोटिदेहै-
रन्यत्र विज्ञिरपि दुर्लभमापशुभ्यम् ।
यत्राञ्जसा घृणितमांसशरीरपिण्डान्-
मोक्षाभिधानकमणिं प्रतियच्छतीशः ॥२१॥

श्रीविश्वनाथसमुपासनवासनाया-
मासक्तधीरिव जिहासति यां न विद्या ।
किञ्चैकमात्रगुरुगर्वभरालसां द्यां
गङ्गाम्भसा हसति या गुरुच्छन्दगुर्वी ॥२२॥

---

२२ गुरुः बृहस्पतिः, विद्यागुरवश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्रान्धमूकजडनिष्क्रियमानवेभ्यो-
ऽप्यन्नं ददात्यनुदिनं स्वयमन्नपूर्णा ।
केयं प्रशस्तिरथवा जगदम्बिकाया
ब्रह्माण्डरक्षणविलक्षणशक्तिमूर्तेः ॥२३॥

यस्याश्च वाग्विभवराजितवाग्मिराज-
साम्राज्यविष्टरमधिश्रयितुं वतीर्णः ।
उद्दामशक्तिसुपरिष्कृतशास्त्रसम्प-
च्छ्रीमान् स्वयं शिवकुमारबुधः प्रसिद्धः ॥२४॥

यस्योद्दामगवीच्छटास्मृतिजडीभूतान्तरा वाग्मिनो
गोष्ठीमध्यगतस्य दर्शनसहप्रादुर्भवत्साध्वसाः
अप्येकं प्रतिकूलकोटिघटकं व्यावल्ग्य दैवाद् वचः
स्वात्मानः कलयन्त्यहो सुकृतिनः कस्मैचिदस्मै नमः ॥२५॥

आसीच्च यस्यां स महामहोपाध्यायो बुधः श्रीजयदेवमिश्रः ।
शिष्यप्रशिष्यैर्वसुधा यदीयैः सौरैरिवास्ते पिहितांशुजालैः ॥२६॥

कैवल्यधाम श्रयतोऽपि तस्य पाण्डित्यकीर्तिर्विजयाभिधाना ।
परिष्क्रियार्था परिभाषिकाणां जागर्ति शास्त्रार्थकृतां जयाय ॥२७॥

आसीच्च यस्यां कविताालताश्रयः प्रसिद्धनामा कविदुःखभञ्जनः ।
यद्वाग्विलासे पदभङ्गपाटवाद् बभूव काव्यं शतशः शतार्थकम् ॥२८॥

निराश्रया सा कवितालताधुना समाहृता हन्त गता रसातलम् ।
ततोप्यधस्तात्पदभङ्गपाटवं दिवंगते पण्डितदुःखभञ्जने ॥२९॥

---

२४ शक्तिः सामर्थ्यम्, आयुधविशेषश्च शास्त्राणि प्रसिद्धानि, शस्त्राण्येव शास्त्राणि च शिवकुमारबुधः तदाख्यः पण्डितः, कार्तिकेयश्च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भूत्वापि द्विजराजिराजपदभाक् सन्मानसोत्तंसिनी
नीरक्षीरविभागपाटवचणा हंसावतंसावली ।
नैवापभ्भिजपक्षपातविधुरा यस्याः प्रशंसांशकं
सेयं पण्डितमण्डली विजयते यस्या महीमण्डले ॥३०॥

त्वं निर्गुणोऽसि गुणलेशविवर्जितोऽहं
काव्यं मदीयमपि निर्गुणमेव देव !
तन्निर्गुणत्रयमतर्क्यसमष्टि दृष्ट्वा
स्मेराननाः कृतधियश्चकिता भवेयुः ॥३१॥

त्वं निर्गुणोऽसि भगवँस्त्रिगुणोऽथवासि
ब्रह्मासि शम्भुरसि वाऽसि हरिस्त्वमेव ।
त्वं विश्वमूर्तिरसि मूर्तिविवर्जितो वा
त्वं योऽसि सोऽसि रघुवीर ! नमोनमस्ते ॥३२॥

रक्षोगणक्षपणकर्मणि मङ्गलार्थं
यत्ताटका भगवता विनिपातितासीत् ।
श्रीकृष्णचन्द्रचरितेऽपि च पूतनाख्या
तन्मङ्गलं भुवनमङ्गलमाततान ॥३३॥

पुम्वत्प्रगल्भसमरोद्यतताटकेयं
व्यापादिता भगवता मुनिरक्षणार्थम् ।
तत्रापि केचिदबलेति रुदन्ति मूढा-
स्ते नाततायिवधवाचमनुस्मरन्ति ॥३४॥

खण्डत्वमेव परशौ च विभूषणे च
गात्रे कलत्रकलितेऽपि कलत्रकेऽपि ।

३० द्विजोविप्रः पक्षीच, मानसं हृदयं सरोविशेषश्च, पक्षपातः पत्रान्दो-
लनम्, माध्यस्थ्यभङ्गश्च,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शर्वस्य सर्वमुचितं ननु खण्डरूपं
तत्खण्डमस्य धनुषोऽपि चकार रामः ॥३५॥

श्रीजानकीकरसरोजसमर्पितं ते
वक्षस्थले स्मरशरावलिमाल्यमासीत् ।
कोदण्डखण्डननिनादविमर्दितानि
भिन्नानि तेन शतधा हृदयानि राज्ञाम् ॥३६॥

आलम्बिते भगवता भृगुनन्दनस्य
चापे द्वितीयरमणीवरणं शशङ्के ।
वीरव्रताप्तविजयोर्जितकीर्तिलक्ष्मी-
रङ्गीकृतेति धरणीतनया ननन्द ॥३७॥

शिष्ये हरस्य किमयं निकृतिं विधित्सुः
कामङ्शरासनमुदञ्चयतीति यावत् ।
सम्भाव्यते सुरगणै रघुवीर तावत्
स्वर्यानमार्गपरिघं विशिखं व्यधास्त्वम् ॥३८॥

पृथ्वीसुताकरनिपीडयितुर्वरस्य
पृथ्वीकरग्रहविधिर्नहि युज्यते मे ।
इत्याकलय्य किमु हंसकुलावतंस !
त्वं भूपतित्वमपहाय वने न्यवात्सीः ॥३९॥

ब्रह्माण्डराज्यसुखभोगपराङ्मुखस्य
क्ष्मालोकपालकपदं किमु लोभनीयम् ।
साकेतराज्यमपि तन्न तृणाय मत्वा
गत्वा वनानि रमसे स्म न तद्विचित्रम् ॥४०॥

---

३६ स्मरशरा· पुष्पाणि

३९ करः पाणिः, बलिश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यल्लिप्सवो विदधते गुरुवन्धुघातं
राज्यं तदेव भवतो भरतस्य मध्ये ।
क्रीडावधूतशिशुकन्दुकदौस्स्थ्यमापद्
धन्योसि राम भरतो भवतोऽपि धन्यः ॥४१॥

यद्भक्तिभावविनयोचितचारुवाचि
स्वर्गप्रतिष्ठगुरुशासनगौरवे च
प्रह्वीभवत्तव मनो द्वितयानुरोधाद्
दोलाधिरूढमभवद्विगतव्यवस्थम् ॥४२॥

यद्रावणादिनिधने प्रखरप्रहारं
बाणं कृपाणमपि नैव ससर्ज काके ।
काणं तृणेन कृतवानथ यत्तमक्ष्णा
युक्तं तदेव भवतो रघुवीरवीर ! ॥४३॥

काकद्वयं तव परीक्षणतत्परं यत्तत्रैककं तु कृतवानसि दिव्यदृष्टिम् ।
काकं द्वितीयमथ च स्फुटितैकनेत्रं तत्ते परीक्षणफले विषमा प्रवृत्तिः ।

कामातुरा शूर्पणखाऽऽगता सा नासानिपातेन गता हताशा ।
हा ! हा ! हिडिम्बातनयं स्मरामि रामप्रमादं तु न विस्मरामि ॥४५॥

सिंहक्रमस्य भवतो हतरावणादेः
केयं स्तुतिः खरनिपातनविक्रमेऽस्ति ।
यद्वास्तु दूषणखरत्रिशिरोभियोगं
मृत्युं त्रिदोषजनितं हृतवान्मुनीनाम् ॥४६॥

एकं खरं निहतवानसि रामभद्र !
तस्मादभूद्रुधिरबीजसमात्सहस्रम् ।

४५ होलिकोत्सवगीतमेतत्.

४६ खरो राक्षसविशेषः गर्दभश्च,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

येनास्ति सम्प्रति धरा भरभुग्नपृष्ठा
तत्किन्न वेत्सि भगवन् रलयोरभेदम् ॥४७

यज्ञोपवीतं रजकादिकानां सिन्दूरबिन्दुर्विधवाललाटे ।
इत्याद्यनर्थं कलिकल्मषाणामसोढपूर्वं सहसे कथं त्वम् ॥४८

शम्बूकमेकं विपथप्रवृत्तं कृपाणलक्ष्यं कृतवानसि त्वम् ।
परन्तु शम्बूकसहस्रमद्य प्रवर्धमानं किमुपेक्षणीयम् ? ॥४९

हा ! रामचन्द्र ! प्रतिमावहेलां चिकीर्षवोऽद्य श्वपचादयोऽमी
कृपाङ्कपाणो भजतेऽथवा किं विमूढधारो दशकण्ठपीठे ॥५०

एकादशोद्वाहविधिं वधूनां पश्यन्ति वेदेष्वपि ये स्मरान्धाः ।
वर्णव्यवस्थात्ययबद्धकक्षाः किं रक्षणीया भवता विपक्षाः ? ॥५१

रामावतारचरिते शवरीति धन्या
कृष्णावतारचरिते कुवरीति पुण्या ।
ताभ्यां नचास्ति तुलना तव सेवकानां
लोके हि चित्रचरिताः प्रभुताविलासाः ॥५२

नाहं भवामि शवरी कुवरी न चाहं
नाहं निषादजगुहो न च पिङ्गलाहम् ।
श्रीमँस्तथापि जगतीसुररक्षकस्त्वं
तद्रक्षणीयदलपातितयास्मि रक्ष्यः ॥५३

रामास्म्यहं तव पदाम्बुरुहद्विरेफो
भक्तिस्तथापि मम वातसुते विशिष्टा ।
यद्बुद्धिवैभवशरीरबलप्रभावाल्-
लङ्केशसंयुगजये तव कीर्तिलाभः ॥५४

४७ खराणामिति शेषः, रलयोरेकत्वात् खलानामिति तात्पर्यम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पाथोधिलङ्घनविधौ विधुरेषु सत्सु
वीरव्रतेषु समयोचितविक्रमोऽयम् ।
सीतावियोगदहनं दहनान्तरेण
लङ्काविनाशचतुरेण चकार शान्तम् ॥५५॥

वीरोऽसि राम ! विदितः स महादिवीरो
वातात्मजस्तदिह मे दृढपक्षपातः ।
किन्तु त्वदीयचरणप्रभवप्रभावः
सोऽपीति तावकपदेऽस्ति ममानुरागः ॥५६॥

भक्तार्तिनाशनविधौ शतशः प्रसिद्धाः
सेव्यार्तिनाशनकृती तु समीरसूनुः ।
श्रीरामचन्द्र भवताप्यनुभूतपूर्व-
तत्तत्प्रदर्शनपरिश्रमणं वृथा मे ॥५७॥

प्रलयपवनदीप्यल्लोललाङ्गूलवह्नौ
धगिति धगिति दीप्ते धाम धामानुरक्ते ।
स्पृशति झटिति नीविं चाञ्चलं राक्षसीनां
व्यरचयत स लङ्कां होलिकादाहशङ्काम् ॥५८॥

एकं धराधरमुदस्य परिश्रमेण
गर्वं बभार रजनीचरचक्रवर्ती ।
त्वत्किंकरैस्सपदि बालविनोदलीला-
नीतैर्धराधरशतैर्जलधिर्बबन्धे ॥५९॥

बन्दीकृताऽखिलदिगीश्वरराज्यलक्ष्मी-
निर्याणमार्ग इह सेतुरुदेतु सिन्धौ ।
इत्याशयेन शयनासनमन्दिरेऽपि
त्वं सेतुबन्धनविधावकरोः प्रबन्धम् ॥६०॥

---

६० शयनासनमन्दिरे समुद्रे.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दारापहारविधुरेऽपि महानुभावा
वेलाविलङ्घनविधौ न समुत्सहन्ते ।
ब्रह्माण्डलङ्घनपरिस्फुटविक्रमोऽपि
तत्सेतुहेतुमतनोरतनुश्रमं त्वम् ॥६१॥

यावन्न मारुतिपराक्रमकम्पितानि
स्वस्थानि हन्त हृदयानि निशाचराणाम् ।
तावन्महाप्रलयकालघटाट्टहासै-
रान्दोलितारिनगरी तव वीरवृन्दैः ॥६२॥

नक्तञ्चरेन्द्रभयमुद्रितकण्ठमन्दं
चक्रन्द यत्र पुरि रुद्धपुरन्दरोऽपि ।
तत्रैव हाटकमयाट्टकपाटकोऽभूत्
कोलाहलस्तव बलोत्कटमर्कटानाम् ॥६३॥

कैलासशैलमपि कन्दुकलीलया यो
वीरो बभार धरणीतरणीद्विपेन्द्रः ।
सोऽप्यङ्गदस्य चरणोद्धरणे हताशो
यद्रावणोऽभवदिदं तव राम ! नाट्यम् ॥६४॥

रात्रिञ्चरः सततरात्रिविधित्सयेव
मार्तण्डमण्डलमपि ग्लपयाञ्चकार ।
धन्यः प्रतापतपनस्तव तद्विरुद्धं
मध्याह्नमेव महसा सहसा व्यधत्त ॥६५॥

गीर्वाणनायकमपि प्रसभं निगृह्य
बन्दीचकार भुवि यः किल मेघनादः ।
वज्रप्रहारकिणकर्कशसर्वगात्रः
सौमित्रिबाणनिहतस्स निरासुरासीत् ॥६६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीमँश्चतुर्दश समा गतनैद्रतन्द्र-
स्त्वत्पादवारिजरसोज्झितराजसौख्यः ।
यल्लक्ष्मणोऽकृत विलक्षणसेवनं तत्
स्मृत्वा भजामि चरणाम्बुरुहं तदीयम् ॥६७॥

धर्मानुरागवशतस्त्यजतः स्वराज्यं
धर्मात्मजस्य भवतश्च समानवृत्तिः ।
सौभ्रात्रमाकलयतामुभयानुजानां
ज्येष्ठानुवृत्तिकृतिनां चरणानि वन्दे ॥६८॥

वर्णान्तरप्रणयनप्रणयी गुरुस्ते
तत्किं भवान्भुवनमण्डलमेकवर्णम् ।
लङ्काधिनाथविजयोर्जितकीर्तिलक्ष्म्या
श्वेतं चिकीर्षसि निरासितवर्णभेदम् ॥६९॥

देवासुरप्रधनलब्धयथेष्टपानाः
बाणाः पुना रुधिरपानतृषातुरास्ते ।
लङ्केशवक्षसि निविश्य पपुर्यदस्रं
तन्मारणे कथममी न कृतघ्नवृत्ताः ॥७०॥

त्रैलोक्यपातकनिपातकतामुपेत्य
बाणास्तथापि भवतः कृतपुण्यपुञ्जाः ।
यद्रक्षिता मुनिगणाः करुणार्तनादा
देवाश्च दिव्यसुखभाजनतामुपेताः ॥७१॥

वक्तुं न युक्तमरिवर्गयशस्तवाग्रे
रोद्धुं तथापि रसनावसरे न शक्या ।

---

६९ गुरुः विश्वामित्रः,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्रावणो रणमहे तव मार्गणेभ्यः
प्राणार्पणेऽपि विमुखो न बभूव चित्रम् ॥७

यस्य प्रचण्डकिरणप्रतिमप्रतापो
ज्वालाशतैस्सपदि भस्मचयावशेषम् ।
साम्भोधिपर्वतवनं भुवनं विधत्ते
स त्वं पलाशदलनाशविधौ किमीड्यः ॥७

रात्रिञ्चरीचरणसञ्चरणावधूता
मन्दोदरीरमणमन्दिरमार्जनीव ।
भूयो बभार रघुवीर ! भवत्प्रभावान्
मन्दारदाम कवरी सुरसुन्दरीणाम् ॥७

सीतारणिप्रभवकोपवितानवह्ने-
स्तृप्तिं विधाय पिशिताशनमेधयज्ञे ।
राज्याभिषेचनमथावभृथानुकल्पं
सानन्दमाकलयति स्म रघुप्रवीरः ॥७५

रामाभिषेकसलिलेन निरस्ततापा-
ऽयोध्यापुरी पुनरुपागतजीवनेयम् ।
सीतेव वल्लभसमागमजातहर्षा
काञ्चिद् रुचिं परिणयोपचितां बभार ॥७६

हर्षोद्गतैश्चपलतुङ्गतरङ्गहस्तै-
रुद्धूतपद्ममकरन्दमयाम्बुवर्षैः ।

---

७२ मार्गणेभ्यो याचकेभ्यः बाणेभ्यश्च ।

७३ पलमश्नन्तीति पलाशा राक्षसाः, पलाशवृक्षाश्च, दलो गणः पत्रञ्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राज्याभिषेकसमये परितः पुरीं तां
ब्रह्मद्रवोज्ज्वलपयाः सरयूः सिषेच ॥७७॥

सीताप्रवासनविधिर्जनतानुरागं
सीतानुरागमपि काञ्चनमूर्तिसीता।
आख्याति राम ! भवतस्तदनन्यसाध्यं
लोकोत्तरं परमचित्रचरित्रजातम् ॥७८॥

जीवो यदा रघुपते भवदेकतन्त्रः
स्वाधीनरक्षणविधिश्च भवत्प्रणीतः।
तत्किं न वारयसि मां कुपथप्रवृत्तं
नोपेक्षते हि जनकस्तनयं पतन्तम् ॥७९॥

श्रीरामभद्र ! तव वंशगुरुर्वशिष्ठ-
स्तद्वंशजोऽहमधुना शरणं प्रपन्नः।
तस्मिन्विरागमनुरागमहो निषादे
श्रुत्वा निमज्जति न कः सहसा विषादे ॥८०॥

त्वत्सेवकोऽपि निजकर्मविपाकमेव
भुङ्क्ते जनोऽयमिति नो रघुवीर ! चित्रम्।
घासेन वर्तयति शङ्करसेवकोऽपि
नन्दीति धिग्विधिललाटलिपिप्रभावम् ॥८१

रक्षोगणानपि नयन्निजधाम राम !
रामेति नाम रमयन् सफली करोषि।
मामर्दयन्निजजनं तु जनार्दनत्वं
तत्प्रार्थयेत न जनः किमु राक्षसत्वम् ॥ ८२ ॥

---

८० वशिष्ठगोत्रोत्पन्नः कविः,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पश्चात्पदानि कतिचित्स्वरसंभ्रहारे
दत्तानि नाथ ! घृणया तदपि स्मरन्ति ।
भूयस्तथाचरसि चेन्मम पापभीत्या
दुर्वादवर्वरगिरां द्विगुणोऽवकाशः ॥ ८३

संसारयन्नखिलयोनिषु जीवजातं
क्रीडस्यतोऽसि परमेश्वर आत्मतन्त्रः ।
तिर्यङ्नृदेवमुनिषु त्वमपि स्वभक्तै-
रावर्त्यसे परमियं जनवश्यता ते ॥ ८४

भ्रमयति मृगतृष्णा मामतोऽहं प्रमत्तो
रघुवर ! तव भक्तिं त्यक्तवानस्मि किं तत् ।
त्वमपि तु मृगतृष्णा-कृष्टचेता वनान्ते
द्रुतपदमभिसर्पन् जानकीं किं व्यहासीः ॥ ८५

सा ते वशीकरणशक्तिरहो गुणानां
यत्पामरा अपि नरास्तव भक्तिभाजः ।
नो चेत्कथं कथय नाथ ! तमोमयस्य
मादृग्जनस्य चरणस्मरणेऽनुरागः ॥ ८६

तन्वा सहैव मम चारुकवित्वशक्ति-
र्विद्या च बुद्धिरपि जर्जरतामुपेता ।
किं साधयामि रघुवीर ! पदाब्जसेवां
यद्वा किमाधिकरणं स्मरणं गतस्य ॥ ८७

कामाभिलाषकलुषीकृतमानसत्वाद्
मिथ्यैव किन्तु खलु निर्जरतां स्तुवन्ति ।
किं मेऽधुना न जरसोपकृतं यदस्यां
श्रीरामचन्द्रचरणस्मरणानुरागः ॥ ८८

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वत्पादपद्मरसिकापि विशुद्धवर्णा
हालङ्कृताऽपि कविता मम दैवयोगात् ।
मिथ्याभिलापरजनीचरनाथनीता
सीता च हन्त विफलीकृतसम्भवासीत् ॥ ८९ ॥

प्रायो विरौति जनता कविताविशुद्धौ
सीताप्रवासनकृती त्वमपि प्रवादे ।
तत्किं न नाथ ! भवता कवितापि हेया
स्यादस्तु किन्तु भविता न तथा मनस्तः ॥ ९० ॥

श्रीरामचन्द्र ! भगवन्निदमर्थये त्वां
मिथ्याप्रलापरसिकैरसि वञ्चितस्त्वम् ।
तत्सावधानमनसा कविताऽनुकम्प्या
लोकानुरञ्जनमपि क्वचिदर्तिहेतुः ॥ ९१ ॥

श्रीरामचन्द्र भगवन् ! परमेश्वरस्त्वं
सत्यं तथापि कवयो न तिरस्क्रियार्हाः ।
तद्वाचि लोकविजयापजयौ निबद्धा-
वाद्यः कविर्हि तव कीर्तिलतालवालः ॥ ९२ ॥

ये सीदन्ति तुरङ्गमेधतपसा योगाभियोगाश्च ये
ते रम्भाकुचकुम्भसादरपरी-रम्भाय जम्भारिताम् ।
विन्दन्ते परमात्मतां च परमा-नन्दाय मन्दाशया
ये तु त्वच्चरणाम्बुजैकशरणा-स्तेषां न केषां द्वयम् ॥९३॥

विषयविषविषण्णो व्याहरं यद्वृषाहं
कटुकमपि तवोपालम्भनं दम्भमूर्तिः ।
तदपि तव मुदे स्याद् बालभाषाविलासं
गणयति न हि दोषं कोऽपि मत्तप्रलापे ॥९४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नो सार्वभौमपदवीं न सुराधिपत्य-
मभ्यर्थये परमधाम न रामचन्द्र ! ।
किन्तु त्वदीयगुणगुम्फनकाव्यशक्ति-
र्भक्तिश्च तेऽङ्घ्रि युगलेऽस्तु भवे भवेऽपि ॥ ९५ ॥

कामादिदोषकलुषेऽपि सतामसेऽपि
मन्मानसे निवस राम ! मुहूर्तमात्रम् ।
प्राणप्रयाणसमये करुणा विधेया
प्राणान्तकं हि किल दण्डविधिं स्मरन्ति ॥ ९६ ॥

ब्रह्मव्यासगणेशशेषसहिता वाग्देवतापि स्वयं
नान्तं त्वद्गुणगुम्फने यदि गता तत्का कथा मादृशाम् ।
नान्तस्ते जगदात्मनो भगवतो नान्तो गुणानाञ्च ते
तस्मात्सर्वमनन्तमेव भवतः काव्येपि मेऽनन्तता ॥९७॥

युग्मकम्

देवाराधनभक्तिभास्वरयश-स्तोमाप्तसोमश्रियो
विद्याकल्पलतालवालवपुषः प्रत्यक्षशान्त्याऽऽकृतेः ।
वाग्देवीसमुपासनादरतया ब्राह्मीं श्रिय बिभ्रतः
प्राधान्यं भजतस्समुज्ज्वलतपश्चर्यार्जितस्वर्गिणाम् ॥९८॥

आस्तिक्याध्वविरूढकण्टककलिव्याख्यासमुन्मूलिनः
काश्यां कायमपास्य निर्ममतया कैवल्यधामाश्रितः ।
श्रीमन्मिश्रमहेशदत्तसुधियः पुण्यप्ररोहात्मना
धीरश्रीरघुवीरमिश्रकविना रामस्तवो निर्मितः ॥९९॥

शुद्धं भवेद्यदि भवेदविशुद्धमेव
श्रीरामचन्द्रचरणार्पितकाव्यमेतत् ।
सन्तः प्रसाद इति सादरमाददीर-
न्नो शुद्ध्यशुद्धिगणना हि महाप्रसादे ॥१००॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एतस्य पद्यनिवहस्य कविर्द्विरेफ-
स्तद्गुञ्जितेऽपि कथमर्थगवेषणा वः।
कर्णामृतं तदिति किन्न मनोऽनुरक्ति-
रव्यक्तवर्णमधुरं हि षडङ्घ्रिगीतम् ॥१०१॥

इति श्रीशारदोपायने रामस्तवः

शुभम्भूयात्



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ श्रीसरस्वत्यै नमः ॥



शारदापायने

# तेजबलिप्रतापविजयः

विश्वात्मनो भगवतः किल योगमाया
नन्दालये समवतीर्य निजाधिवासात् ।
तीर्थञ्चकार बुधवृन्दनिषेव्यमाणं
यं सिद्धपीठमधिविन्ध्यगिरि प्रदेशम् ॥ १ ॥

विन्ध्येश्वरीविपुलमन्दिरगर्भगर्जद्
घण्टारवप्रतिरवोन्मुखबर्हिवर्गः ।
तस्माद् धुताशदिशि नातिविदूरवर्ती
जागर्त्यसौ बडहराभिधभूमिभागः ॥ २ ॥

श्रीशोणभद्रनदतुङ्गतरङ्गमाला-
व्यामर्दमन्थरगतिर्धृतशीकराङ्कः ।
श्रीखण्डकाननपरागकृताङ्गरागो
यस्मिंश्चरन् सुखयते जनतां समीरः ॥ ३ ॥

चैत्रादिमासत्रितयेऽन्नयाम्भः-पूर्णं पुनर्वारिकणावहीनम् ।
यस्मिन्प्रपाकुण्डमुपत्यकाया-मेकं विभोर्भूतदयां व्यनक्ति ॥ ४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गौरीशङ्करमूर्तिरत्रमनुजैरज्ञातवासावधिः
सद्भक्तैः समुपास्यते प्रतिदिनं दूरादपीहागतैः ।
तत्तल्लोकमनोरथं फलति सा सद्यः प्रसादोन्मुखी
नाश्चर्यं किल सिद्धपीठमहिमा पारे मनो धावति ॥ ५ ॥

यस्मिन् शुद्धान्तरगतैर्मनुजैः कदाचिद्
गीर्वाणलोक इव रम्यतरः प्रदेशः ।
आलोक्यते शुचितपस्विकृताधिवास
इत्यामनन्ति परमाद्भुतमाप्तवर्गाः ॥ ६ ॥

प्रायेण संसृतिमये विषये विरक्ताः
निर्द्वन्दमत्र गिरिगह्वरमाश्रयन्तः ।
योगप्रयोगविनियोजितचित्तवृत्ति
ध्यायन्ति निर्मलधिया परमात्मतत्त्वम् ॥ ७ ॥

यस्मिन् शिवद्वार इति प्रसिद्धे स्थाने शिवद्वार इव द्वितीये ।
प्रशस्तवृन्दारकवृन्दसेव्ये शिवालयो राजति दर्शनीयः ॥८॥

तत्राश्मभित्त्युत्खचिताकृतीनि सर्वाङ्गसम्पादितसौष्ठवानि ।
चित्राण्यनेकानि विलोक्य लोकाः प्राचीनशिल्पातिशयं स्मरन्ति॥

श्रीशङ्करध्याननिमग्नचित्ताः स्थिराश्शिलासुप्रतिमावभासाः ।
कुटीषु वृक्षेषु निषेदिवांसस्तपस्विनस्तत्र तपश्चरन्ति ॥ १० ॥

सरांसि संफुल्लसरोरुहाणि सन्मानसानीव सुनिर्मलानि ।
यस्याढ्यतां काममुदारताञ्च पुरातनीं साधु निवेदयन्ति ॥११॥

यस्मिन् विराजतितरां किल दुर्गशाला
शोणस्य दक्षिणतटे प्रथितास्त्यगोरी ।
शोणप्रवाहसुषमेक्षणकौतुकेव
जागर्ति सौधशिखरोच्चशिरो दधाना ॥१२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

म्लेच्छाधिराजकृतनिन्दितनीतिभीतै-
र्भूपैर्विहाय निजवासमहीं महोनाम् ।
वालन्दवंशमपसार्य वशीकृताया
यस्याः स्थितिर्भवति सप्तशताब्दमाना ॥१३॥

विन्ध्याचलोद्धतिनिवारणकौतुकेन
कुम्भोद्भवेन मुनिना विहितप्रतिष्ठः ।
जागर्ति यत्र भगवान् प्रथितप्रभावः
सोमान्वयावनपरः किल सोमनाथः ॥१४॥

कुण्डारिनामदनुजेन कृतप्रतिष्ठा
तद्भक्तनाम विकृतं दधती कुडारी ।
देवी प्रसिद्धमहिमा महनीयमूर्ति-
र्दुर्गस्य यत्र दिशि राजति पश्चिमायाम् ॥१५॥

देवीविहारवसुधेव सहावतीर्णा
दिव्योपभोगलसिता वरराजधानी ।
यस्मिन् सुधांशुकुलसम्भवभूमिपालै-
रारोपिता जयति राजपुराभिधाना ॥१६॥

आज्ञेव कुम्भजमुनेरचलप्रतिष्ठा
वेलेव रत्ननिचयाचितपार्श्वभागा ।
रत्नाचलोज्ज्वलतटीव सुवर्णरम्या
या द्यौरिव प्रचुरपुण्यबलाधिगम्या ॥१७॥

## युग्मकम्

विद्यादाक्षिण्यदीक्षाविनयनयधृतिक्षान्तिकान्तिप्रतापै-
राजद्राजन्यलक्ष्मीसमुदितविभवै-र्भासिताशावकाशः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चन्देलश्चन्द्रवंशक्षितिपतितिलकश्चन्द्रिकाचारुकीर्ति-
स्तत्र श्रीमानगोरीबडहरधरणी-मण्डलाखण्डलोभूत् ॥१८॥

नाम्ना श्रीरघुनाथसाहिनृपति-र्यस्यप्रतापातप-
ज्वालाव्याकुलमानसाः पदनख-ज्योतिश्शरच्चंद्रिकाम् ।
आश्रित्य प्रतिपक्षभूमिपतयोप्यासन् विनष्टज्वराः
सम्प्राप्ते शरणं प्रसादसरणिर्यत्तादृशैर्वर्तिता ॥ १९ ॥

दुष्टध्वान्तप्रशमनपटुः सन्मनःकैरवाणां
व्याकोशश्रीप्रणयनगुरुः पादसङ्क्रांतभूभृत् ।
अस्य श्रीकेशवशरणसाऽहीति नामाभिरामः
क्षीराम्भोधेर्हिमकर इव प्रादुरासीत्तनूजः ॥ २० ॥

बालोऽपि यः पितरि शक्रपदं प्रयाते
लोकस्य शोकशिखिनं शमयाम्बभूव ।
अस्तं गते दिनमणौ किमसौ द्वितीया-
चंद्रोऽपि नान्धतमसं शकलीकरोति ॥२१॥

पूर्वावसानजनितप्रमुदः प्रतीपा
एतत्प्रतापपटलोद्भवदापदश्च ।
एकेन बाष्पसलिलं शिशिरं परेण
नेत्रेण शोकदहनकथितं व्यमुञ्चन् ॥२२॥

विततविमलकीर्तेर्देवमूँगाधिभर्तु-
र्विजयिजयप्रकाश-क्षोणिपालस्य कन्या ।
तुहिनगिरितनूजा शङ्करस्येव वेद-
शरणकुवँरिनाम्नी तस्य देवी बभूव ॥२३॥

अथाभिषिक्तः प्रिययानया समं समस्तसामन्तशिखामणिश्रितः ।
सं केशवादिश्शरणोः महीपतिश्शशास सम्यङ् निजराजमण्डलम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्थं कियत्कालमयं महीपतिः प्रजा यथावत्परिपालयन्स्वयम् ।
रोगाभिभूतोऽधिजगाम काशिकां समं जनन्याप्यथ जाययाऽनया ।

तदेकपुत्रा जननी तदीया भार्याप्यपुत्रेति तदाश्रये द्वे ।
राज्यव्ययेनाप्यगदं विधित्सू बभूवतुस्तं विविधप्रयत्नैः ॥२६॥

यथा यथा तस्य गदे चिकित्सा तथा तथा भीषणताभ्युपेता ।
हा हा निराशा भिषजः प्रयाता आयुस्समाप्तौ हि न यत्नसिद्धिः ।

अथ स नृपतिलक्ष्मीं मातरं स्वाश्च जाया-
महह हतविपाकां शोकसिन्धौ विधूय ।
बहुलदलशशीव प्रत्यहं दीयमान-
श्शिव शिव शिवलोकं वीतशोकं प्रतस्थे ॥२८॥

सा देवराजतनयाऽनयास्य पत्नी
याम्प्राप दैव हतकेन हता विपत्तिम् ।
ताम्वीक्ष्य मन्दिरशिलाप्यरुदत्तदानीं
का नाम चेतनकथा वत वर्णनीया ॥२९॥

प्रजामनाथामवलोक्य सेयमालम्ब्य धैर्य्यं हृदि शोकतप्ते ।
बभार भारं निजराज्यलक्ष्म्याश्चकार राज्योचितसुप्रबन्धम् ॥३०॥

प्रजाः प्रजावत्परिपालयन्ती प्रतीपवर्गांश्च निवारयन्ती ।
राज्यश्रियश्चोन्नतिमाचरन्ती सा प्राप कीर्तिं भुवि सञ्चरन्तीम् ॥३१॥

इज्याभुजां कलिकदर्थितजीविकाना-
माजीवनाय सततोर्जितयज्ञभारा ।
वेदावनार्थमधुना विधिना विसृष्टा
सासीच्च वेदशरणेतियथार्थवर्णा ॥३२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राप्तानि प्रथितश्रिया यदनया चत्वारि धामानि यच्-
चातुर्मास्यमुपासितश्च विधिवत् सोमोपि यत्साधितः।
कैलाशप्रतिमश्च मन्दिरमिदं काश्यां यदुल्लासितं
तत्सर्वं कलिमानमर्दनधिया सत्योत्सवो दर्शितः ॥३३॥

विलुप्तसंज्ञा जरसा रुजा च सेयं यदासीदधिकाशि राज्ञी।
स्वार्थान्धधूर्तैरथ वैद्यनाथ-सिंहः कृतो राज्यपदाधिकारी ॥

आसीच्च राज्या अनपत्यभावाद् राज्याधिकारः स्वसपिण्डगामी
अभ्यर्हितस्तत्र महानुभावो वंशक्रमात्तेजबलिप्रतापः ॥३५॥

ज्येष्ठोऽथवा ज्येष्ठतनूद्भवो वा राज्याधिकारी भवतीति नीतिः
ज्येष्ठात्मजं तेजबलिप्रतापं ज्ञात्वापि मुग्धः स जहार राज्यम्

कालः करालः करुणाविहीनः प्राप्तो जगद्भस्मरतां दधानः।
राज्ञी ततः सा शिवसात्म्यमापद् धूर्तास्तु धूलिप्रतिमाः प्रयाताः

ततः पितृव्यं व्यपनीतनीतिं सिंहासनात्पातयितुं प्रवृत्तः।
न्यायालये तेजबलिप्रताप-सिंहोऽर्थयामास निजाधिकारम् ॥

राज्यापहारविधुरेऽपि विषादशून्यो
राज्यं स्वहस्तगतमेव विमृश्य धीरः।
राज्यापहारकदशां विषमां भवित्रीं
सम्भाव्य यः करुणया सुचिरं शुशोच ॥३६॥

मिर्जापुरात्प्राप्य तथा प्रयाग-न्यायालयात् राज्यपदं स्वकीयम्
राज्याधिकारं निजजन्मसिद्धं चक्रे करे तेजबलिप्रतापः ॥

ततः पितृव्यो नृपभूमिकान्तां विहाय शीघ्रं सदनं प्रयातः।
आशापिशाचीविवशस्तथापि द्वीपान्तरन्यायगृहं सिषेवे ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीमान् प्रभुस्तेजवलिप्रताप-सिंहस्तु सिंहासनमाससाद ।
सुधांशुवंशक्षितिपाललक्ष्मी-स्तं धर्मराजप्रतिमं सिषेवे ।४२॥

यः स्वीयवंशगुणगौरवरक्षणार्थं-
र्द्विंत्रैः समेत्य निजबुद्धिबलावलम्बः ।
गोपालवृन्दमघगोर्णमिवासुरारी
राज्यं पितृव्यकवलीकृतमुज्जहार ॥४३॥

बाबूप्रधानविजयेन्द्रवहादुराख्यो
बाबूधनुर्धर इति प्रथितस्तु ताभ्याम् ।
प्राणानपेक्षकृतभूरिपरिश्रमाभ्या-
माकृष्टबाहुरिव राजरमाभ्ययासीत् ॥४४॥

यद्वापनीतिस्थितिदूयमाना वंशावलिप्राप्तनिजाधिकारम् ।
गुणानुरागादिव राज्यलक्ष्मीः प्रापत्स्वयं तेजवलिप्रतापम् ॥

वाङ्माधुरीव जनमोहनमन्त्रशक्ति-
र्नेत्रे वशीकरणयन्त्रमये तदीये ।
तत्स्वात्मसादकृत लोकमशेषमेष
तन्त्रस्वतन्त्रसुधियां किमसाध्यमस्ति ॥४६॥

यतो यतस्तत्सुयशः प्रगीयते ततस्ततो वैरिगणस्य दुर्यशः ।
सितासिते ते मिलिते विराजत-स्सुरापगासूर्यसुताम्भरो यथा ॥

उत्फुल्लपङ्कजविशालविलोचनाभ्यां
लक्ष्यीकृतस्सपदि येन विपक्षवर्गः ।
त्रासोल्लसद्धृदयपात इवावलम्बं
वक्षस्थले करयुगं सहसा व्यधत्त ॥४८॥

औदार्यमेतस्य विचार्य तत्समं विचिन्तयन्नस्मि वृथापरिश्रमः ।
बलिर्बुधद्वेषितया निराकृतः स धर्मविद्वेषितया तु कर्णकः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पितृव्यदुर्नीतिनितान्तखिन्नं राज्यं समासाद्य पुरश्चकार।
प्रजानुरागं जनयन् प्रगाढं यशो वितेने भुवनान्तराले ॥५०॥

राज्यश्रियः सेवनतत्परोयं राजा कियन्तं समयं व्यनैषीत्।
अथाचिकित्स्येन महागदेन शनैश्शनैरेष निपीडितोभूत् ॥

आढ्यं दरिद्रमधनञ्च धनाधिनाथं
कोपप्रसादवशतश्शतशो व्यधात्सः।
मन्ये स्वकीयलिपिलेपनतोऽतिरुष्टो
धाता तदायुरवशिष्टलिपिं ममार्ज ॥५२॥

भैषज्यग्रहशान्तिसंयमतपश्चर्य्याः सुराराधनं
तद्रोगोपशमाय यद्यदुचितं तत्तत्समस्तं कृतम्।
किन्त्वासीन्न तदेकमप्यनुगुणं तद्रोगनिर्मूलने
दैवे हि प्रतिकूलतां गतवति क्वाप्नोति सिद्धिं जनः ॥५३॥

सोयं शरर्षिनवभूमितवैक्रमाब्दे
चैत्रेथ शुक्लदशमीतिथिमन्दवारे।
विन्ध्येश्वरीविमलधाम्न्यधिगङ्गमङ्गं
मुक्त्वाऽभवत् परमधामसुखाधिकारी ॥५४॥

भूवल्लभस्य परितोषितसज्जनस्य
वृन्दारकेन्द्रपदवीं भजतोऽप्यकाण्डे।
चन्द्रांशुकच्छवियशोंशुकमस्य शुभ्रं
स्त्रीब्रह्मचर्य्यवसनं वसुधा दधाति ॥५५॥

योऽयं करालकलिकालनिपीडितस्य
धर्मस्य हस्तमवलम्बितुमुद्यतोऽभूत्।
सोप्यद्य हन्त कलिना मलिनाशयेन
निर्य्यापितस्तदधुना वृष एव शोच्यः ॥५६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिर्जापुरादधिगतश्च तथा प्रयागात्
सम्राट्सभान्तिमविनिर्णयवागपेक्षम् ।
राज्यं सकण्टकमिदं तनये निधाय
यातोऽसि हन्त सुरलोकसुखोत्सुकस्त्वम् ॥५७॥

नापेक्षितस्स तनयो नच राज्यलक्ष्मी-
र्नो राज्यसाधनसहायकबन्धुवर्गः ।
सम्राट्सभाऽऽगतमभीष्टजयप्रमाण-
पत्रं नवा कथमहो त्वरितो गतोऽसि ॥५८॥

विपक्षवर्गेऽपि मयार्थितो यत् कृपाकटाक्षं कृतवान्भवांस्तत् ।
औदार्य्यमाजन्म न विस्मरामि स्मराम्यहं तन्मयि गौरवं ते ॥

अहह भरतकल्पः श्रीविलासे विरक्तः
प्रियजनपरिभोग्यां साधयन् राज्यलक्ष्मीम् ।
श्रमशिथिलशरीरं हा विहायासि यात-
स्तदिदमखिलवृत्तं भावयन्तो हताः स्मः ॥६०॥

राज्यं विधाय सुचिरं रुचिरप्रबन्धं
राज्यश्रियः सुखविलासमवाप्स्यसि त्वम् ।
इत्थं मनोरथमयाऽमृतमापिबत्सु
स्वीयेषु हन्त पतितो विषमो विपाकः ॥६१॥

रन्ध्रोत्सादितमित्रभूतकमलः सन्तापको यत्पिता
किञ्चानेकतटस्थपाटनपटु-र्यस्य स्वसा वक्रगा ।
स त्वं रे यमराज ! राजतिलकं नापातयिष्यो यदा
कौलीनव्रतचर्य्यया त्रिभुवने ख्यातोऽभविष्यः कथम् ॥६२॥

विहारे व्याहारेऽनुचितपरिहारेऽरिविजये
प्रदाने सन्माने निगमपथयानेऽथ विनये ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुणाधाने ध्याने मखविधिवितानेऽपि नृपतिं
न लोके भूलोके वडहरनृलोकेशसदृशम् ॥६३॥

संरक्षणीये तनयेऽक्षणीव यस्मिँस्त्वया पुष्पभरो न सोढः।
तस्मिन्नहो दुर्वहराज्यभारं निधातुकामस्य न ते दयाऽऽसीत् ॥

राज्योपभोगसुखनिर्वृतराजपुत्राः
प्रायः पितुर्विरहकातरतां त्यजन्ति।
पुत्रस्तथापि भवतश्चरणानुरागी
राज्यश्रियामपि विरक्तमतिश्शुचास्ते ॥६५॥

प्राप्तो भवान् परमधाम न शोचनीयः
स्वार्थान्धतापरवशास्तु वयं विषण्णाः।
शान्तिं भजस्व भगवन्! भव राज्यलक्ष्म्यां
पुत्रे पदाब्जरसिकेऽपि च सानुकम्पः ॥६६॥

जयति जगति कीर्तिं राज्यलक्ष्मीस्वरूपा
जयति च तव मूर्तिः शारदादिर्महेशः।
इति शिथिलितशोका-स्सन्ति लोकाः कथञ्चिद्
विधिविकृतविपाके रीतिरेषैव लोके ॥६७॥

श्रीशारदादिकमहेशप्रसादसिंहः
सिंहक्रमः प्रतिभटद्विपमण्डलेषु।
तस्यात्मजोयमधुना विधुनाति लोके
शोकं सितातपनिवारणचन्द्रकान्त्या ॥६८॥

सोऽयं पितुर्विरहकातरमानसोऽपि
शोकाकुलप्रकृतिमण्डलमाकलय्य।
लक्ष्मीकरग्रहधुरां सदयं बभार
लोकोपकारकृतिनो हि महानुभावाः ॥६९॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एतद्यशस्तुहिनदीधितिरप्यसह्यं
तापं तनोति परमं परमण्डलेषु ।
तत्तत्प्रतापतपनातपमुज्ज्वलन्तं
सोढुं कथन्नु रिपवः प्रभवो भवेयुः ॥७०॥

यत्पूर्वराजविरहातपतापशान्तिं
सद्यो विधाय विदधाति परं प्रमोदम् ।
श्वेतातपत्रमुदितं भवतस्तदेतद्
राजन्नखण्डशशिमण्डलमेव मन्ये ॥७१॥

सम्राट्सभानिर्णयपत्रमार्गं जनेषु पश्यत्सु समुत्सुकेषु ।
वितर्कतापप्रशमप्रवाहः प्रहर्षवर्षः समयः समेतः ॥७२॥

पत्रं तदानीं समभीप्सितं नः स्वराजलक्ष्मीविजयप्रकाशम् ।
राज्यातपत्रप्रतिमं प्रणम्य-मानन्दसिन्धुं तरलीचकार ॥७३॥

हर्षप्रकर्षोन्मदमानवानां समुच्चरद्भिर्जयजीवशब्दैः ।
भेरीनिनादैश्च दिवं स्पृशद्भि-स्सार्धं शतघ्नीध्वनिरुल्ललास ॥

फलं पितुः प्राणपरिश्रमस्य महोत्सवाकारमुपेतमेतत् ।
इति प्रशंसन्पितरं सराग-ममन्दमानन्दमवापभूपः ॥७५॥

अन्नानि वासांसि च रौप्यमुद्रा हिरण्यमुद्राभरणानि सद्यः ।
द्वाभ्यां कराभ्यां विससर्ज राजा सदा ह्युदारः किमुत प्रसङ्गे ॥

यस्मिन्नुदारचरितेऽभिमतं ददाने
कर्णं स्मरन्ति नच भोजधराधिनाथम् ।
अभ्युद्यते दिनकरे प्रसरत्प्रकाशे
के दीप्तदीपकलिकामभिसाभिलाषाः ॥७७॥

यत्साधनं मुनिजनस्य मतं क्षमेति
राज्ञः पराक्रम इति प्रथयन्तु किन्तु ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नैरिष्वपि प्रहितया क्षमयाऽस्य सिद्धि-
स्तस्मात्क्षमापतिरयं नृपतिर्द्विधार्थः ॥७८॥

तारुण्यमाकलयतोऽपि नितान्तशान्ति-
धर्माध्वनि प्रणयिता जरतो यथास्य।
प्राग्जन्मसिद्धसुकृतं हि सदानुगामि
नापेक्षते खलु वयःक्रममीदृशानाम् ॥७९॥

शान्तोऽप्ययं मुनिरिवात्यविषह्यतेजा
यस्मिँस्तृणन्ति रिपवः कृतभस्मशेषाः।
अन्तर्हितानलशिखो ननु सूर्यकान्त-
स्तेजोऽन्तरप्रतिहतो ज्वलतीति सिद्धम् ॥८०॥

स कर्मसाक्षीव जनस्य चेष्टितं परोक्षवृत्तेरपि साध्ववुध्यत।
निसर्गतो दूरदृशामसूदृशा-मगोचरीभूतमभूतपूर्वकम् ॥८१॥

प्रत्यर्थिवामनयनानयनाञ्जनाम्भः-
पूरेण यस्य परिपूर्ण इवोत्तरङ्गः।
आराप्रदेशमभितो ग्रसमान आरा-
च्छोणोऽपि धारयति सम्प्रति नीलिमानम् ॥८२॥

भूभृच्छतोद्धरणवेगविघूर्णितानां
प्रत्यागतप्रतिभटोद्धतवाहिनीनाम्।
ग्रासेन शुष्कसमिधामिव वर्धमानो
यस्य प्रताप इव बाडववह्निरास्ते ॥८३॥

यस्य प्रतापदहनो वडवानलस्य
तेजो विजित्य सहसा यदि नाग्रहीष्यत्।

---

७८ क्षमा क्षान्तिः, पृथिवी च,

८३ वाहिनीनां नदीनां सेनानाञ्च।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विद्वेषिनीरजदृशां नयनाम्बुपूरै-
र्भूयोऽभिवृद्धिविभवं न तदाश्रयिष्यत् ।८४।।

देव ! त्वत्प्रसरत्प्रतापयशसो-र्भासा विनिर्धूतयोः
सूर्याचन्द्रमसोर्गतिर्विगलिता नष्टाः कलांशा ध्रुवम् ।
शक्या नो गणकैर्यथावदधुना ज्ञातुं ग्रहाणां स्थिति-
स्तन्मन्ये ग्रहणाधिमासविषये सम्भ्रान्तिकोलाहलः ८५।।

सद्भावे भवतः प्रतापयशसो-रुल्लासिनोरम्बरे
मार्तण्डद्वयमिन्दुमण्डलयुगं प्रत्यक्षमेवेक्ष्यते ।
तन्मासद्वयवृद्धिवादविकल-ज्योतिर्विदां विग्रह-
स्सङ्कीर्णग्रहसम्भवो न गणिता नभ्यासमूलाग्रहः ।।८६।।

भवत्प्रतापज्वलनानुमाने विपक्षवर्गोऽपि तु पक्ष एव ।
तत्साधनं वाष्पभरोद्गमोऽत्र तत्तार्किकाणां हृदि विस्मयाय ।।

तेषां विपक्षोद्घनलानुमाने जलाशयोस्तीति विचारकार्श्यम् ।
तव प्रतापं वडवानलं य-ज्जलेन्धनं ते न विचारयन्ति ।।८८।।

शत्रुव्याकरणस्य साधितपद-स्याश्चर्य्यमेतत्परं
यन्नैतस्य गुणापवादविषयो वृद्धिर्न वा बाध्यते ।
नो वा वर्णविपर्ययः क्वचिदपि व्यर्थो न शास्त्रश्रमो
नावर्णः प्रथमाभिधानविषयो नो वा निघातः पदे ।।८९।।

न नाममात्रे किल भाति शारदा लास्यं तदास्येऽपि करोति सर्वदा
यथार्थनामास्ति तदेष शारदा-प्रसादसिंहः प्रथितो धरातले ।।

नयनवसुनवक्ष्मा-सम्मिते वैक्रमाब्दे
तपसि सिति चतुर्थ्यां भानुवारे व्यधत्त ।
वडहरनरनाथः शारदादिर्महेशः
कृषकजनसमृद्ध्यै मैरिसं लार्डफार्मम् ।।९१।।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्राज्य एव दिनकृत्परिवृत्तिमेति
सोऽयं प्रभुर्जयति पञ्चमजार्जसम्राट्।
तस्य प्रतापतपनेन सहाभ्युदेतु
लोकोपकारकृतिमैरिसलार्डफार्मम् ॥६२॥

सम्राट्पञ्चमजार्जसुप्रतिनिधिर्लार्डास्पदो मैरिसोऽ-
भ्यायातोऽत्र निमन्त्रितो वडहरा-धीशालयं सादरम्।
फार्मारम्भविधिं स्वयं स विदधे फार्मं स्वनामाङ्कितं
सम्मानोचितसुप्रवन्धरचना-प्राप्तप्रहर्षो गतः ॥६३॥

राज्ये साधु निवासितास्सुचरिता निस्सारिता दस्यवो
मित्राणि प्रतिमानितानि नितरां निर्मूलिता दुर्हृदः।
सम्यग्लालनपालनात्प्रकृतय-स्सन्तोषितास्सर्वत-
स्तत्तत्कार्यमयङ्करोति चतुरो यच्चच्छ्रुतं नीतिषु ॥६४॥

भवद्यशो नागवधूपवर्णितं निशम्य शेषोऽपि विशेषसम्मदः
शिरांसि सङ्कम्पयते यदा तदा धरा भराभुग्नतरा प्रकम्पते।

कुशासनस्थोऽपि सुशासनोऽयं सशारदोऽप्येकविशारदोऽस्ति।
नित्यं करोत्सारितदानवारि-रपि स्वयं सेवितदानवारिः ॥६६॥

सोयं स्वपूर्वपुरुषत्रयमानितं मां विद्यागुरुं समधिगम्य गृहीतविद्यः
काव्ये विशेषमनुरागमुदारवुद्धिर्विभ्रत्सतां सततमादरमातनोति

पुण्यप्ररोहाविव वर्धमानौ दीर्घायुषौ ते नृपते! तनूजौ।
ताभ्यां भवान्भाति महोदयाभ्यां भीमार्जुनाभ्यामिव धर्मराजः

त्रिधा विभक्ता ननु धर्ममूर्ति-र्यथा भवान् स्वीयतनूद्भवौ च।
तत्पादषट्कं प्रकटं विलोके तां किं कलावेकपदीं स्मरन्ति ॥६९॥

---

९६ कुशासनं कुत्सितशासनं कुशस्यासनञ्च
दानवारिशब्दो विष्णुपरो दानजलपरश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अघापहारी विदितोऽसि राजँ-स्तथासि गोवर्धनसानुरागः ।
ततो भवान्भाति निजात्मजाभ्यां द्वाभ्यांभुजाभ्यामिव कृष्णचंद्रः ॥

गङ्गा भगीरथनृपस्य यथास्ति कीर्ती
राजँस्तथा तव पितुर्नरराजलक्ष्मीः ।
तत्कीर्तिपालनविधौ सततोत्सवस्त्वं
सानन्दमाकलयराजरमानुरागम् ॥१०१॥

निजतनयमुदारं राजभारार्द्धभागे
भरवहनसमर्थं यौवराज्ये निधाय ।
स्वयमपि परिशिष्टं राज्यभारं वहँस्त्वं
चिरमनुभव राजन् ! राजलक्ष्मीविभूतिम् ॥१०२॥

अगदमजरगात्रं कार्यसम्भारधीरं
विमलमतिविकासं राजलक्ष्मीविलासम् ।
तनययुगविनोदानन्दसिन्धूत्तरङ्गं
चिरमवतु भवन्तं भूपते ! विन्ध्यदेवी ॥१०३॥

धीरश्रीरघुवीरमिश्ररचितं संक्षिप्तसारान्तरं
काव्यं तेजबलिप्रतापविजयं नामावलोक्य प्रभुः ।
श्रीमाँस्तेजवलिप्रतापनृपतिः स्वर्गासनस्थोऽप्यसौ
काव्यालापरसानुरक्तहृदयो भूयात्प्रसादोन्मुखः ॥१०४॥

श्रीमँस्तेजवलिप्रतापनृपते ! मत्प्रार्थनाकर्ण्यतां
स्वर्गानन्दसमुन्मुखेन भवता त्यक्ता वयं तद्वरम् ।
किन्त्वस्मासु सदानुरक्तहृदयस्त्वं गौरवं यद् व्यधा-
स्तस्य प्रत्युपकारकातरधिया-मेतद्धि नो वैभवम् ॥१०५॥

इति श्रीशारदोपायने तेजवलिप्रतापविजयः ॥

---

१०० अघं पापम्, दैत्यविशेषश्च । गोः पृथिव्या वर्द्धने अनुरागसहितः । पक्षे गोवर्धने पर्वतविशेषे अनुरागसहितः, अथवा गोवर्धनस्य सानुषु रागो यस्य ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सम्राट्जज्जकलक्टरादिपदवीभाजाश्च भूमीभुजां
सान्निध्येन यथा विभासि सदसि श्रीमन्नगोरीपते !
तेषां सद्गुणगुम्फपद्यसहितं श्रीशारदोपायनं
शोभां तद्वदधिश्रयेदितिधिया तत्सङ्ग्रहोस्मिन्कृतः ॥१॥

पद्यान्यनेकविषयोचितवर्णनानि-तत्तत्प्रसङ्गवशतो निजनिर्मितानि ।
तेषां सुरक्षणधिया मम सङ्ग्रहोऽयं मोदं तनोतु हृदि काव्यरसोत्सवानाम्

श्रीमतां कालेकाँकराधीशश्री १०८ महाराजावधेशसिंह-
महोदयानां विवाहोत्सवे निर्मितं पृथङ्मुद्रितमिदं
नवरत्नम्

वस्वश्वग्रहमेदिनीमितशर-वैशाखशुक्ले तिथौ
गौर्यां मङ्गलवासरे दुहितरं वाँसीधराधीशितुः ॥
कालेकाँकरभूपतिः परिणयन् राजावधेशो बभौ-
दम्पत्योरनयोरिवास्तु शिवयो-र्वर्द्धिष्णु सन्मङ्गलम् ॥१॥

कालेकाँकरमेदिनीपरिवृढे वाँसीं प्रति प्रस्थिते
वाँसीस्थेषु वरानुयायिजनता-संख्याभिधानोत्सुकाः ॥
व्यावल्गद्वरवाजिराजिचरण-व्याधूतधूलीघटा
दिग्दन्तावलधूलिकेलिकुतुकं सम्पादयन्ति स्वयम् ॥२॥

संख्यातीतवरानुयात्रिकजन-ग्रामोऽभिरामोत्सवः
स्वच्छन्दोभिससार चेत्सरभसं सीमानमुल्लङ्घयन् ॥
जाग्रत्कम्पकला स्फुरत्परिमला दूरोल्लसन्मेखला
त्रुट्यत्तोरणमालिका कलरवा वाँसी तदासीत्पुरी ॥३॥

इतो घनघटाच्छटा गजघटाः सघण्टारवा-
स्तडित्तरलकाञ्चनप्रसृतदामधामाश्रिताः ॥
निशाम्य मददुर्दिना विविधहास्यलास्यक्रमे
मयूरवनितायिता मदविकाशिवाँसीस्त्रियः ॥४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्फुरन्नानारत्नैस्ततशतवितानैरुपचिता
लसद्रम्भाराजिः सरससुमनोवृन्दकलिता ॥
विराजन्मेनालिर्वरवरजनावासवसति-
र्निसर्गात्स्वर्गाभा सकलजनतानन्दमतनोत् ॥५ ।

श्रीमद्रमेशक्षितिपालसूनू राजावधेशो मदनावतारः ।
तत्र स्थितो दर्शनलालसानां करोति सार्थानि विलोचनानि ॥

क्वचिद्विबुधमण्डली विविधमन्त्रपाठोन्मुखा
क्वचिच्च करकङ्कणस्वनसमृद्धगीताः स्त्रियः ॥
क्वचिज्झणझणायिता वितरणार्थमुद्रावली
करग्रहविधावभूद् विविधमण्डनो मण्डपः ॥७॥

जनकजनपदे यत्पाणिपीडोत्सवं ते
कथयति कविराद्यस्तत्र मोहोवधेश ! ॥
यदिह तव विवाहो दृश्यतेऽन्यत्र देशे
प्रकटविधिविरुद्धं नागमं विश्वसन्ति ॥८॥

वाग्देवीप्रथितप्रवाहलसिता लक्ष्मीशसम्मानिता
शत्रुव्राततरूंस्तरङ्गरभसा-दुन्मूलयन्ती स्वयम् ॥
कालेकाँकरभूभृतो धृतजनुर्नित्यं क्षमामण्डले
गङ्गेवाखिललोकशोकशमनी वंशावली वर्द्धताम् ॥९॥

नवरत्नमिदं दिव्यं विदुषां कण्ठभूषणम् ।
ग्रथितं रघुवीरेण सुचिरं रुचिरं भवेद् ॥१०॥

इति बडहरराजपण्डितः श्रीरघुवीरमिश्रः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीमतां सम्राट्कुमाराणां प्रिंस-एल्वर्ट्विक्टरमहोदयानां
काश्यां शुभागमनसमये भारतजीवने १३-१-१८९०
ई० वत्सरे प्रकाशितमिदं
स्वागताभिनन्दनम्

काशीं समागतवते भवते प्रभो ! श्री-राजेश्वरीहृदयनन्दननन्दनाय
सुस्वागतं विरचयन्नहमद्य पद्यं स्वात्मानुरूपमुपहारमुपानयामि ॥

स्वयमवितुमनीहस्याद्य वाचंयमत्वाद्
धृततनुरिव शक्तिर्बुद्धदेवस्य यास्ते ।
निखिलभुवनरक्षा-कार्य्यसम्भारदक्षा
त्वयि दिशतु शुभं श्री-राजराजेश्वरीयम् ॥२।

गीर्वाणत्राणहेतोरथ रणरणक-श्राणनायासुराणां
द्रोहोद्रेकद्रवद्राक्चलितसुरमह-स्तोमभूता प्रभूता ॥
जाने या जातु जाता जगति विजयिनी जाह्नवीजानिजाया
सैवैषाद्यापि नाम्ना त्यजति रिपुगणग्रासलीलाभिलाषम् ॥

श्रीमन्महोदयमहोमहनीय-प्रिंस-
एल्वर्टविक्टर-कुमार ! कुमारकान्ते ! ॥
आसिन्धुबन्धुरमहीन्द्रमहीन्द्रबाहो !
न्यस्तारिमस्तकपदस्तरसा प्रशाधि ॥४॥

काशीराजशुभाभिषेकसमय-प्रारब्धसन्मङ्गल-
ध्वानो मन्दरकन्दरां विदलयन् यावन्न मन्दायितः ।
दिष्ट्या कोपि च तावदेव निखिलध्वानप्रधानोधुना
ब्रह्माण्डोदरभाण्डभेदपटुता-भृत्पण्डितश्चण्डते ॥५॥

काश्यामद्य महामहोत्सवसहे श्रीमत्कुमारागमे
प्रोज्जागर्ति नितान्तनर्तितनद-न्माद्यन्मयूरावलिः ।
प्रत्यर्थिप्रमदाविलासहसित-ज्योत्स्नाच्छटाविद्विषन्
मानोत्तानविनादनिर्जितघन-ध्वानः शतघ्नीध्वनिः ॥ ६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शत्रूच्चाटनमोहमारणवश-स्तम्भाद्यनेकक्रियो-
मन्त्रःसिद्ध इव प्रसिद्धमहिमा श्रीमन् ! कुमारप्रभो !
स्वर्वामासुकुरं कराद्विघट-यंस्ते स्वागतं व्याहरन्
दिङ्नागश्रुतिसम्पुटे घटयते विघ्नं शतघ्नीध्वनिः ॥७॥

श्रीमत्पादसरोजमञ्जुलरज-स्स्पर्शोत्सुका वासवी-
मायान्तीं नगरीं प्रहर्तुमथवा स्वानन्दतो नर्तितुम् ।
सन्नद्धा किमु विन्दुमाधवतट-स्तम्भद्वयाडम्बरा-
मुत्तालां भुजवल्लरीं कलयते काशीपुरीयं प्रभो ! ॥८॥

काशीयं जगदीशनन्दनशरच्चन्द्रोदये सङ्कुला
पौरैर्जानपदैर्जनैः सनिनदैर्वेलेव वीचीशतैः ।
किञ्चाम्लानसुधाप्रसाधनसिता दीपावलीश्रेणिभिः
प्रालेयाद्रिमहीव राजतितरां दिव्यौषधीराजिभिः ॥९॥

यत्काश्यां प्रतिमन्दिरं प्रतिपथं प्रत्यापणं साम्प्रतं
दृश्यन्ते विहसद्विधूमकलिकाः संख्याधिका दीपिकाः ।
तन्मन्ये युवराजदर्शनपराः प्राचीनराजप्रिया
हाराकारतया विभान्ति परित-स्तारामहाराजयः ॥१०॥

क्वचिद्भेरीनादः क्वचिदपि शतघ्नीघनरवः
क्वचिद्वीणावाणी क्वचिदपि लसद्वाररमणी ।
क्वचित्सेनाश्रेणी क्वचिदपि च सामन्तसमितिः
क्वचिज्ज्योतिश्शोभा तदिह शतशो भाति महिमा ॥११॥

एकाश्रयं सुजलयन्त्वनदीशतस्य
तोयाश्रयं रचयितुं पयसां विशुद्ध्यै ।
श्रीसंल्लसद्विजयिनीसुतनन्दनोऽस्यां
प्रारम्भमङ्गलविधिं स्वयमातनिष्ट ॥१२॥

इति बडहरराजपण्डितः श्रीरघुवीरमिश्रः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भागलपुरप्रान्तनिवासिनां सरयूपारीणब्राह्मणकुलालङ्करणानां
पं० श्रीरामचन्द्रशर्ममहोदयानाम् आरानगरे जजपद-
मलङ्कुर्वतां लब्धविश्रामपुरस्काराणां स्वगृह-
प्रस्थानावसरे समर्पितमिदं

अभिनन्दनपत्रम्

श्रीमन् न्यायधुरन्धर ! प्रणिपतन् सम्प्रार्थये सादरं
सम्प्रत्यस्ति युगाधमः कलिरिति व्याख्याति कश्चिज्जनः ।
अस्माकं तु विनिश्चयोऽस्ति सुतरां त्रेतायुगो वर्त्तते
तत्तथ्यं कथय प्रमाणमपि नः श्रीरामचन्द्रो भवान् ॥१॥

युग्मकम्

जन्म ब्रह्मकुलेऽस्ति यस्य सरयूपारीति विश्वश्रुते
न्यायाधीशपदं च यस्य सुलभं यत्प्राड्विवाकाह्वयम् ।
व्यासङ्गः खलदण्डने च सविधि-र्यस्य प्रजापालने
श्रद्धा यस्य तथा सनातनपथा-चारप्रचारे सदा ॥२॥

यस्याज्ञा वसुधाधिपैः स्वशिरसा मालेव संधार्यते
लेखं यस्य विधातृलेखसदृशं मार्ष्टुं न कोऽपि क्षमः ।
प्रज्ञा यस्य दुरूहनिर्णयविधौ निर्बाधमाधावति
श्रीमँस्तस्य तव प्रशस्तचरितं किं किं न वा स्तूयते ॥३॥

नीरक्षीरविवेकपाटवमहो यद्राजहंसे श्रुतं
न्यायाधीशपदं गते भगवति प्रत्यक्षमेवेक्ष्यते ।
यन्निर्दोषजने न दण्डनविधि-र्दुष्टो नवा त्यज्यते
दिव्यं चक्षुरुदेति निर्णयविधौ भव्यात्मनां तादृशाम् ॥४॥

हाईकोर्टरजिष्ट्रारपदवीं लब्ध्वा चिरं साधयन्
आरापत्तनप्राड्विवाकपदवीं प्राप्तः पुनः साम्प्रतम् ।
न्यायोत्कर्षवशेन सर्वजनता-चेतः समुल्लासयन्
दण्डैश्चापि यथापराधविहितै-स्त्वं स्तूयसे दण्डितैः ॥५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विद्वांसो व्यवहारनिर्णयविधौ पूर्वं स्थिता ब्राह्मणाः
सम्प्रत्याङ्गलराजवाचि निपुणा वर्णानपेक्षं कृताः ।
एतस्मिन्समयेऽपि विप्रवपुषा प्राप्तं पदं प्राक्तनं
तेन ब्रह्मकुलात्मगौरवमहो पारे गिरां धावति ॥६॥

प्रायेणाङ्गलशास्त्रवञ्चितधियो धर्मे स्वकीये घृणां
कुर्वाणाः कलिधर्ममेव सुगमं मत्वा सुखं बिभ्रति ।
श्रीमांल्लब्धपदोऽपि चाङ्गलगिरां पारं गतोऽपि प्रभो !
स्वं धर्मं न विमुञ्चतीति चकितैः राखोच्यते धार्मिकैः ॥७॥

स्वाधीनाखिलकर्मचारिजनता सम्मानिता बन्धुवत्
शिक्षार्थं शुचिदण्डनं विदधता पुत्रेष्विवान्येष्वपि ।
सौजन्येन सुधामयेन वचसा सन्तोषिता मन्त्रिणः
किम्वान्यद् गुणगौरवेण भवता सम्राट्समाराधितः ॥८॥

स श्रीमानधुना यियासति गृहा न्विश्रामशातोत्सुक-
स्तद्भद्रं पथि भद्रमस्तु भवतो भद्रं सदा सद्मनि ।
किन्त्वस्मद्विरहव्यथापनयने रक्ष्या दयादृष्टयो
दूरस्थोऽपि हि भानुमान्निजकरैः पुष्णाति पद्माकरान् ॥९॥

नवरत्नस्य मालेयं सद्वृत्तगुणगुम्फिता
विन्यस्ता रघुवीरेण भवत्कण्ठे विराजताम् ॥१०॥

इति वडहरराजपण्डितः द्विरेफापरनामधेयश्रीरघुवीरमिश्रः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काश्यां मण्डलेशपदालङ्करणानां सरयूपारीणब्राह्मणसभायां सभापतिपदमलङ्कुर्वतां श्रीवि० विश्वनाथम् महोदयानां करकमलयोः समर्पितमिदम्

अभिनन्दनपत्रम्

काशी धन्यतमेयमस्ति नगरी श्रीविश्वनाथः स्वयं
यस्यां प्राप्य कलक्टरस्य पदवीं शास्ति प्रजाः सादरम्।
धन्या किं न ततोपि भाति सरयू-पारि-द्विजानां सभा
स श्रीमानधुना सभापतिपदं स्वीकृत्य यस्यां स्थितः ॥१॥

मन्ये शासनकौशलं भगवतः सर्वं प्रशंसास्पदं
किन्त्वेकं तदनल्पहर्षजननं वाराणसीवासिनाम्।
दुर्योगेन घृतादिकं विपणिनो ये दूषयन्ते खला-
स्तेषां दण्डविधापनेन भवता यद्धर्मरक्षा कृता ॥२॥

ग्राम्याणां नववातचक्रचलतां यत्नेन यच्छ्रीमता
सर्वेषामुपकारतत्परतया सम्राजि भक्तिर्दृढा।
स्वात्मन्यप्यनुरागवद्व्यवहृतौ श्रद्धा समुत्पादिता
तत्सर्वं तव बुद्धिवैभवमहो सम्राट्प्रजारञ्जनम् ॥३॥

स श्रीमानधुना समुन्नतिपदं देशान्तरं याति त-
द्धर्षोत्कर्षकरं तथापि भवतो विश्लेषदुःखाकरम्।
किन्तु प्राप्य कमिश्नरस्य पदवीं भूयोऽपि वाराणसी-
मागत्य स्ववियोगतापशमनं शीघ्रं कुरुष्व प्रभो ! ॥४॥

इति बडहरराजपण्डितः श्रीरघुवीरमिश्रः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्रन्थसमाप्तिः ।

या ब्रह्माण्डजनिस्थितिप्रशमने शक्तिः परब्रह्मणो
यत्संसर्गमृते शिवोऽपि शवतां प्राप्नोति कान्या कथा ।
सेयं विन्ध्यनिवासिनी बडहराऽगोरीपते रक्षणे
सन्नद्धा जननीव लालनपरा भूयात्सदा श्रेयसे ॥१॥

दिक्पालाष्टकतेजसां समुदयः साक्षान्मनुष्याकृतिः
सम्राडष्टमएडवर्डभगवान् जागर्ति यद्रक्षकः ।
सोयं राजशिरोमणिर्बडहराऽगोरीधरावल्लभः
सानन्दं सुतसौतसेवितपदो जीयात्समानां शतम् ॥२॥

परिकलितसुवर्णा साधुवृत्तोल्लसन्ती
रुचिरगुणनिबद्धा पद्यमुक्तावलीयम् ।
विपुलहृदययोगादाश्रयेत प्रकर्षं
भजति नृपतिकण्ठे रत्नतां किन्न गुञ्जा ॥३॥

युग्मकम्

ख्यातं भोजपुरं तदन्तरगतो ग्रामो मसुण्ढीति य
स्तत्रासीत् स वशिष्ठगोत्रसरयूपारिद्विजग्रामणीः ।
विद्यावारिधिसाररत्ननिचयो-पादानरत्नाकरः
श्रीदेवीशरणाभिधो मुनिवर-स्तत्पुण्यपुञ्जोद्भवः ॥४॥

आसीन्मिश्रमहेशदत्तविबुधो विद्यावदातः पिता
माता चाप्यनुरागिणीति महिता गौरीव शैलोज्ज्वला ।
तत्पुण्यप्रभवेण निर्मितमिदं श्रीशारदोपायनं
काव्यं श्रीरघुवीरमिश्रकविना श्रीरामपादेऽर्पितम् ॥५॥

गुणनवनवधात्रीसम्मिते वैक्रमाब्दे शुभविजयदशम्यां संस्कृता मुद्रणेन
बडहरनृपकीर्तिः शारदोपायनाख्यासह रघुवरकीर्त्या-नल्पकल्पं विभातु
काव्यापवादरसिकाय नमोऽस्तु तुभ्यं भ्रातर्नियच्छ हृदि मे कवितापमादम्
वातोदरो यदि भवेदथ मूकभावादारुह्य तालशिखरं प्लुतमालप त्वम् ॥

इति द्विरेफापरनामधेयः श्रीरघुवीरमिश्रः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

